अथ मङ्गलम् ॥ श्रीहयग्रीवाय नमः । शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ नारायणं नमस्कृत्यनरं चैवनरोत्तमम् ॥ देवींसरस्वतीं

वि० चैव ततो जयमुदीरयेत् ॥ २ ॥ स०
१ व्यासं वसिष्ठनप्तारं शक्तेः पौत्र-
मकल्मषम् । पराशरात्मजं वन्दे
शुकतातं तपोनिधिम् ॥ ३ ॥
व्यासाय विष्णुरूपाय व्यास-
रूपाय विष्णवे ॥ नमो वै ब्रह्म- १

निधये वासिष्ठाय नमो नमः ॥४॥
अचतुर्वदनो ब्रह्मा द्विबाहुरपरो-
हरिः ॥ अभाललोचनः शम्भु-
र्भगवान् बादरायणः ॥ ५ ॥
अथ विष्णुसहस्रनामप्रारम्भः ।
श्रीवेङ्कटेशाय नमः ॥ यस्य

स्मरणामात्रेण जन्मसंसारबंध-
नात् ॥ विमुच्यते नमस्तस्मै
विष्णवे प्रभविष्णवे ॥ १ ॥ नमः
समस्तभूतानामादिभूताय भूभृ-
ते ॥ अनेकरूपरूपाय विष्णवे
प्रभविष्णवे ॥ २ ॥ वैशम्पायन

उवाच ॥ श्रुत्वाधर्मानशेषेण
पावनानि च सर्वशः ॥ युधिष्ठिरः
शान्तनवं पुनरेवाभ्यभाषत ॥३॥
युधिष्ठिर उवाच ॥ किमेकं दैवतं
लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयु-

मीनवाः शुभम् ॥ ४ ॥ को धर्मः सर्वधर्माणां भवतः परमोमतः ॥ किंजपन्मुच्यते जन्तुर्जन्मसंसार-बंधनात् ॥ ५ ॥ भीष्म उवाच ॥ जगत्प्रभुं देवदेवमनन्तं पुरुषो-त्तमम् ॥ स्तुवन्नामसहस्रेण पु-

रुषःसततोत्थितः ॥ ६ ॥ तमेव-
चार्चयन्नित्यं भक्त्या पुरुषम-
व्ययम् । ध्यायन्स्तुवन्नमस्यंश्च
यजमानस्तमेव च ॥७॥ अना-
दिनिधनंविष्णुं सर्वलोकमहेश्व-
रम् ॥ लोकाध्यक्षंस्तुवन्नित्यं

सर्वदुःखातिगो भवेत् ॥ ८ ॥
ब्रह्मण्यं सर्वधर्मज्ञंलोकानां की-
र्तिवर्धनम् ॥ लोकनाथं महद्भूतं
सर्वभूतभवोद्भवम् ॥९॥ एष मे
सर्वधर्माणां धर्मोऽधिकतमोमतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चे-

न्नरः सदा ॥ १० ॥ परमं यो
महत्तेजः परमं यो महत्तपः ॥
परमं यो महद् ब्रह्म परमं यः
परायणम् ॥ ११ ॥ पवित्राणां
पवित्रं यो मंगलानां च मंगलम् ॥
दैवतं देवतानां च भूतानां योऽ-

चि० ५

व्ययः पिता ॥ १२ ॥ यतः स-
र्वाणि भूतानि भवन्त्यादियुगा-
गमे ॥ यस्मिंश्च प्रलयं यान्ति
पुनरेव युगक्षये ॥ १३ ॥ तस्य
लोकप्रधानस्य जगन्नाथस्य भूपते
विष्णोर्नामसहस्रं मे शृणु पापभ-

स० ५

यापहम् ॥१४॥ यानि नामानि
गौणानि विख्यातानि महात्मनः॥
ऋषिभिः परिगीतानि तानि
वक्ष्यामि भूतये ॥ १५ ॥ ऋषि-
र्नाम्नां सहस्रस्य वेदव्यासो
महामुनिः ॥ छन्दोऽनुष्टुप् तथा

देवो भगवान् देवकीसुतः ॥१६॥
विष्णुं जिष्णु महाविष्णुं प्रभ-
विष्णुं महेश्वरम् । अनेकरूप-
दैत्यान्तं नमामि पुरुषोत्तमम्
॥ १७ ॥ अस्य श्रीविष्णोर्दि-
व्यसहस्रनामस्तोत्रमहामन्त्रस्य

भगवान्वेदव्यास ऋषिः ॥ अनु-
ष्टुप् छन्दः । श्रीकृष्णः परमा-
त्मा श्रीमन्नारायणो देवता ॥
अमृतांशूद्भवो भानुरिति बीजम् ।
देवकीनन्दनः स्रष्टेति शक्तिः ॥
त्रिसामा सामगः सामेति हृद-

यम् ॥ शंखभृन्नंदकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् ॥ रथाङ्गपाणिरक्षोभ्य इति कवचम् । उद्भवः क्षोभणो देव इति परमो मन्त्रः॥ श्री-कृष्णप्रीत्यर्थं सहस्रनामस्तोत्र-

जपे विनियोगः ॥ अथ करन्या-
सः ॥ ॐ उद्धवाय अंगुष्ठा-
भ्यां नमः । ॐ क्षोभणाय तर्जनी-
भ्यां नमः ॥ ॐ देवाय मध्यमा-
भ्यां नमः । ॐ उद्धवाय अना-
मिकाभ्यां नमः ॥ ॐ क्षोभणाय

कनिष्ठिकाभ्यां नमः ॥ ॐ देवाय करतलकरपृष्ठाभ्यां नमः । इति करन्यासः ॥ अथ हृदयादिषडङ्गन्यासः । सुव्रतः सुमुखः सूक्ष्मः ज्ञानाय हृदयाय नमः ॥ सहस्रमूर्धा विश्वात्मा ऐश्वर्याय

शिरसे स्वाहा ॥ सहस्रार्चिः
सप्तजिह्वः शक्त्यै शिखायै वषट् ।
त्रिसामा सामगः साम बलाय
कवचाय हुम् ॥ रथांगपाणि-
रक्षोभ्यस्तेजसे नेत्राभ्यां वौषट् ।
शार्ङ्गधन्वा गदाधरः वीर्याय अ-

स्त्राय फट् ॥ ऋतुः सुदर्शनः कालः भूर्भुवस्स्वरोम् दिग्बंधः । इति हृदयादिन्यासः ॥ अथ ध्यानम् ॥ ॐ क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतैमौंक्तिकानां मालाक्लृप्ताऽऽसनस्थः

स्फटिकमणिनिभैर्मौक्तिकैर्मण्डि-
ताङ्गः ॥ शुभ्रैरभ्रैरदभ्रैरुपरिवि-
रचितैर्मुक्तपीयूषवर्षैरानन्दी नः
पुनीयादरिनलिनगदाशंखपाणि-
र्मुकुन्दः ॥ १ ॥ अथवा ॥ भूः
पादौ यस्य नाभिर्वियदसुरनि-

चि० १०

लश्चन्द्रसूर्यौ च नेत्रे कर्णावाशाः
शिरो द्यौर्मुखमपि दहनो यस्य
वास्तेयमब्धिः ॥ अन्तःस्थं
यस्य विश्वं सुरनरखगगोभोगि-
गंधर्वदैत्यैश्चित्रं रंरम्यते तं त्रिभु-
वनवपुषं विष्णुमीशं नमामि

स० १०

॥ २ ॥ अथवा । शान्ताकारं
भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं
शुभाङ्गम् ॥ लक्ष्मीकान्तं कमल-
नयनं योगिभिर्ध्यानगम्यं वन्दे
विष्णुं भवभयहरं सर्वलोकैकना

थम् ॥ ३ ॥ अथवा ॥ मेघ-
श्यामं पीतकौशेयवासं श्री-
वत्साङ्कं कौस्तुभोद्भासिताङ्गम् ॥
पुण्योपेतं पुण्डरीकायताक्षं विष्णुं
वन्दे सर्वलोकैकनाथम् ॥ ४ ॥
अथवा ॥ सशंखचक्रं सकिरीट-

कुण्डलं सपीतवस्त्रं सरसीरुहेक्ष-
णम् ॥ सहारवक्षस्थलकौस्तु-
भश्रियं नमामि विष्णुं शिरसा
चतुर्भुजम् ॥ ५ ॥ ॐ विश्वं
विष्णुर्वषट्कारो भूतभव्यभव-
त्प्रभुः ॥ भूतकृद्भूतभृद्भावो भूता-

त्मा भूतभावनः ॥ १ ॥ पूतात्मा प-
रमात्मा च मुक्तानां परमा गतिः ॥
अव्ययः पुरुषः साक्षी क्षेत्रज्ञो
ऽक्षर एव च ॥ २ ॥ योगो योग-
विदां नेता प्रधानपुरुषेश्वरः ॥
नारसिंहवपुः श्रीमान् केशवः

पुरुषोत्तमः ॥ ३ ॥ सर्वः शर्वः
शिवः स्थाणुर्भूतादिर्निधिरव्ययः॥
संभवो भावनो भर्ता प्रभवः
प्रभुरीश्वरः ॥४॥ स्वयंभूः शम्भु
रादित्यः पुष्कराक्षो महास्वनः॥
अनादिनिधनो धाता विधाता

धातुरुत्तमः ॥ ५ ॥ अप्रमेयो
हृषीकेशः पद्मनाभोऽमरप्रभुः ॥
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः
स्थविरो ध्रुवः ॥ ६ ॥ अग्राह्यः
शाश्वतः कृष्णो लोहिताक्षः
प्रतर्दनः ॥ प्रभूतस्त्रिककुब्धाम

पवित्रं मङ्गलं परम् ॥ ७ ॥
ईशानः प्राणदः प्राणो ज्येष्ठः
श्रेष्ठः प्रजापतिः ॥ हिरण्यगर्भो
भूगर्भो माधवो मधुसूदनः ॥ ८ ॥
ईश्वरो विक्रमी धन्वी मेधावी
विक्रमः क्रमः ॥ अनुत्तमो दुरा-

धर्षः कृतज्ञः कृतिरात्मवान् ॥ ६ ॥
सुरेशः शरणं शर्म विश्वरेताः
प्रजाभवः ॥ अहः संवत्सरो
व्यालः प्रत्ययः सर्वदर्शनः
॥ १० ॥ अजः सर्वेश्वरः सिद्धः
सिद्धिः सर्वादिरच्युतः॥ वृषाक-

पिरमेयात्मा सर्वयोगविनिः-
सृतः ॥ ११ ॥ वसुर्वसुमनाः
सत्यः समात्मा संमितः समः॥
अमोघः पुण्डरीकाक्षो वृषकर्मा
वृषाकृतिः॥ १२॥ रुद्रो बहुशिरा
बभ्रुर्विश्वयोनिः शुचिश्रवाः ॥

अमृतः शाश्वतः स्थाणुर्वरारोहो
महातपाः ॥१३॥ सर्वगः सर्व-
विद्भानुर्विष्वक्सेनो जनार्दनः ॥
वेदो वेदविदव्यंगो वेदांगो वेद-
वित्कविः ॥१४॥ लोकाध्यक्षः
सुराध्यक्षो धर्माध्यक्षः कृताकृ-

तः ॥ चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्र-
श्चतुर्भुजः ॥ १५ ॥ भ्राजिष्णुर्भो-
जनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयो-
निः पुनर्वसुः ॥ १६ ॥ उपेन्द्रो
वामनः प्रांशुरमोघः शुचिरूर्जि-

तः॥ अतीन्द्रः संग्रहः सर्गो धृता-
त्मा नियमो यमः ॥१७॥ वेद्यो
वैद्यः सदायोगी वीरहा माधवो
मधुः॥ अतीन्द्रियो महामायो
महोत्साहो महाबलः ॥ १८ ॥
महाबुद्धिर्महावीर्यो महाशक्ति-

महाद्युतिः ॥ अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९ ॥ महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ॥ अनि-रुद्धः सुरानन्दो गोविन्दो गोवि-दां पतिः ॥ २० ॥ मरीचिर्दमनो

हंसः सुपर्णो भुजगोत्तमः ॥ हिर-
ण्यनाभः सुतपाः पद्मनाभः प्रजा-
पतिः ॥ २१ ॥ अमृत्युः सर्वदृक्
सिंहः सन्धाता सन्धिमान् स्थि-
रः ॥ अजो दुर्मर्षणः शास्ता विश्रु-
तात्मा सुरारिहा ॥२२॥ गुरुर्गुरु-

तमो धाम सत्यःसत्यपराक्रमः ॥
निमिषोऽनिमिषः स्रग्वी वाच-
स्पतिरुदारधीः ॥ २३ ॥ अग्रणी-
र्ग्रामणीः श्रीमान् न्यायो नेता स-
मीरणः॥ सहस्रमूर्द्धा विश्वात्मा
सहस्राक्षः सहस्रपात् ॥ २४ ॥

आवर्त्तनो निवृत्तात्मा संवृतः
सम्प्रमर्दनः ॥ अहः संवर्त्तको व-
ह्निरनिलो धरणीधरः ॥२५॥ सुप्र
सादः प्रसन्नात्मा विश्वधृग्विश्व-
भुग्विभुः॥ सत्कर्ता सत्कृतः साधु-
र्जह्नुर्नारायणो नरः ॥२६॥ अस-

इन्द्रोऽयोऽप्रमेयात्मा विशिष्टः
शिष्टकृच्छुचिः ॥ सिद्धार्थः
सिद्धसंकल्पः सिद्धिदः सिद्धिसा-
धनः ॥ २७ ॥ वृषाही वृषभो
विष्णुर्वृषपर्वा वृषोदरः ॥ वर्धनो
वर्धमानश्च विविक्तः श्रुति-

सागरः ॥ २८ ॥ सुभुजो दुर्धरो
वाग्मी महेन्द्रो वसुदो वसुः ॥
नैकरूपो बृहद्रूपः शिपिविष्टः
प्रकाशनः ॥ २९ ॥ ओजस्ते
जोद्युतिधरः प्रकाशात्मा प्रता-
पनः ॥ ऋद्धः स्पष्टाक्षरो मन्त्र-

श्चंद्रांशुर्भास्करद्युतिः ॥ ३० ॥
अमृतांशूद्भवो भानुः शशबिंदुः
सुरेश्वरः ॥ औषधं जगतः सेतुः
सत्यधर्मपराक्रमः ॥ ३१ ॥ भूत-
भव्यभवन्नाथः पवनः पावनो-
ऽनलः ॥ कामहा कामकृत्कान्तः

वि० कामः कामप्रदः प्रभुः ॥ ३२ ॥ स०४
युगादिकृद्युगावर्तो नैकमायो म-
हाशनः ॥ अदृश्योऽव्यक्तरूपश्च
सहस्रजिदनन्तजित् ॥ ३३ ॥
इष्टो विशिष्टः शिष्टेष्टः शिखण्डी २०
नहुषो वृषः ॥ क्रोधहा क्रोधकृ-

त्कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥
अच्युतः प्रथितः प्राणः प्राणदो
वासवानुजः ॥ अपां निधिरधि-
ष्ठानमप्रमत्तः प्रतिष्ठितः ॥३५॥
स्कन्दः स्कन्दधरो धुर्यो वरदो
वायुवाहनः ॥ वासुदेवो बृहद्भा-

वि० नुरादिदेवः पुरन्दरः ॥ ३६ ॥ स०
अशोकस्तारणस्तारः शूरः शौ-
२१ रिर्जनेश्वरः॥ अनुकूलः शतावर्त्तः
पद्मी पद्मनिभेक्षणः ॥ ३७ ॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः
शरीरभृत्॥ महर्द्धिर्ऋद्धो वृद्धात्मा २१

महाक्षो गरुडध्वजः ॥३८॥ अतु-
लः शरभो भीमः समयज्ञो हवि-
र्हरिः ॥ सर्वलक्षणलक्षण्यो ल-
क्ष्मीवान् समितिंजयः ॥३९॥ वि-
क्षरो रोहितो मार्गो हेतुर्दामोदरः
सहः ॥ महीधरो महाभागो वेग-

वानमिताशनः ॥४०॥ उद्भवः
क्षोभणो देवः श्रीगर्भः परमेश्वव-
रः॥ करणं कारणं कर्त्ता विकर्त्ता
गहनो गुहः ॥४१॥ व्यवसायो
व्यवस्थानः संस्थानः स्थानदो
ध्रुवः ॥ परर्द्धिः परमः स्पष्टस्तुष्टः

पुष्टः शुभेक्षणः ॥ ४२ ॥ रामो
विरामो विरजो मार्गो नेयो नयो-
ऽनयः ॥ वीरः शक्तिमतां श्रेष्ठो
धर्मो धर्मविदुत्तमः ॥ ४३ ॥
वैकुण्ठः पुरुषः प्राणः प्राणदः
प्रणवः पृथुः॥ हिरण्यगर्भः शत्रुघ्नो

व्याप्तो वायुरधोऽक्षजः ॥४४॥ ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ॥उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥ विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ॥ अर्थोऽनर्थो महाकोशो

महाभोगो महाधनः ॥ ४६ ॥
अनिर्विण्णः स्थविष्ठो भूर्धर्मयू-
पो महामखः ॥ नक्षत्रनेमिर्नक्षत्री
क्षमः क्षामः समीहनः ॥४७॥
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं
सतां गतिः ॥ सर्वदर्शी विमुक्ता-

तमा सर्वज्ञो ज्ञानमुत्तमम् ॥४८॥
सुव्रतः सुमुखः सूक्ष्मः सुघोषः
सुखदः सुहृत् ॥ मनोहरो जित-
क्रोधो वीरबाहुर्विदारणः ॥४९॥
स्वापनः स्ववशो व्यापी नैका-
त्मा नैककर्मकृत् ॥ वत्सरो वत्स-

लो वत्सी रत्नगर्भो धनेश्वरः
॥५०॥ धर्मगुब्धर्मकृद्धर्मी सद-
सत् क्षरमक्षरम् ॥ अविज्ञाता
सहस्रांशुर्विधाता कृतलक्षणः
॥५१॥ गभस्तिनेमिः सत्त्वस्थः
सिंहो भूतमहेश्वरः। आदिदेवो म-

हादेवो देवेशो देवभृद् गुरुः ॥५२॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः
पुरातनः ॥ शरीरभूतभृद्भोक्ता
कपीन्द्रो भूरिदक्षिणः ॥५३॥ सो-
मपोऽमृतपः सोमः पुरुजित्पुरुषो-
त्तमः ॥ विनयो जयः सत्यसन्धो

दाशार्हः सात्त्वतां पतिः ॥५४॥
जीवो विनयिता साक्षी मुकु-
न्दोऽमितविक्रमः ॥ अम्भोनि-
धिरनन्तात्मा महोदधिशयोऽन्त-
कः ॥५५॥ अजो महार्हः स्वा-
भाव्यो जितामित्रः प्रमोदनः ॥

वि० आनन्दो नन्दनो नन्दः सत्य- स०
२६ धर्मा त्रिविक्रमः ॥ ५६ ॥ महर्षिः
कपिलाचार्यः कृतज्ञो मेदिनी-
पतिः ॥ त्रिपदस्त्रिदशाध्यक्षो
महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥
महावराहो गोविन्दः सुषेणः २६

कनकाङ्गदी ॥ गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥५८॥ वेधाः स्वांगोऽजितः कृष्णो दृढः संकर्ष-णोऽच्युतः ॥ वरुणोवारुणोवृक्षः पुष्कराक्षो महामनाः ॥५९॥ भग-वान्भगहा नन्दी वनमाली हला-

युधः ॥ आदित्यो ज्योतिरादि-
त्यः सहिष्णुर्गतिसत्तमः॥ ६० ॥
सुधन्वा खण्डपरशुर्दारुणो द्रवि-
णप्रदः॥ दिवस्पृक्सर्वदृग्व्यासो
वाचस्पतिरयोनिजः ॥ ६१ ॥
त्रिसामा सामगः साम निर्वाणं

भेषजं भिषक् ॥ संन्यासकृच्छमः
शान्तो निष्ठाशान्तिः परायणः
॥६२॥ शुभाङ्गः शान्तिदः स्रष्टा
कुमुदः कुवलेशयः ॥ गोहितो
गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः
॥ ६३ ॥ अनिवर्ती निवृत्तात्मा

संक्षेप्ता क्षेमकृच्छिवः ॥ श्रीव-
त्सवक्षाः श्रीवासः श्रीपतिः
श्रीमतां वरः ॥६४॥ श्रीदः श्रीशः
श्रीनिवासः श्रीनिधिः श्रीविभा-
वनः ॥ श्रीधरः श्रीकरः श्रेयः
श्रीमाँल्लोकत्रयाश्रयः ॥ ६५ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दि-
र्ज्योतिर्गणेश्वरः ॥ विजितात्मा
विधेयात्मा सत्कीर्तिश्छिन्नसं-
शयः ॥६६॥ उदीर्णः सर्वतश्चक्षु-
रनीशः शाश्वतः स्थिरः ॥ भूशयो
भूषणो भूतिर्विशोकः शोकना-

शनः ॥ ६७ ॥ अर्चिष्मानर्चितः
कुम्भो विशुद्धात्मा विशोधनः ॥
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमि-
ताविक्रमः ॥ ६८ ॥ कालनेमि-
निहा वीरः शौरिः शूरजनेश्वरः ॥
त्रिलोकात्मा त्रिलोकेशः केशवः

केशिहा हरिः ॥ ६९ ॥ काम-
देवः कामपालः कामी कान्तः
कृतागमः ॥ अनिर्देश्यवपुर्विष्णु-
र्वीरोऽनन्तो धनंजयः ॥ ७० ॥
ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्म-
विवर्धनः ॥ ब्रह्मविद्ब्राह्मणो ब्रह्मी

ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥
महाक्रमो महाकर्मा महातेजा
महोरगः ॥ महाक्रतुर्महायज्वा
महायज्ञो महाहविः ॥ ७२ ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः
स्तोता रणप्रियः ॥ पूर्णः पूरयिता

पुण्यः पुण्यकीर्तिरनामयः ॥७३॥
मनोजवस्तीर्थकरो वसुरेता वसु-
प्रदः ॥ वसुप्रदो वासुदेवो वसु-
र्वसुमना हविः ॥ ७४ ॥ सद्गतिः
सत्कृतिः सत्ता सद्भूतिः सत्परा-
यणः ॥ शूरसेनो यदुश्रेष्ठः सन्नि-

वि०

३१

वासः सुयामुनः ॥ ७५ ॥ भूता-
वासो वासुदेवः सर्वासुनिलयो-
ऽनलः ॥ दर्पहा दर्पदो दृप्तो दुर्धरो
ऽथापराजितः ॥७६॥ विश्वमूर्त्तिः
र्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ॥
अनेकमूर्तिरव्यक्तः शतमूर्तिः

स०

३१

शतानन: ॥ ७७ ॥ एको नैक:
सव: क: किं यत्तात्पदमनुत्त-
मम् ॥ लोकबन्धुर्लोकनाथो
माधवो भक्तवत्सल: ॥ ७८ ॥
सुवर्णवर्णो हेमांगो वरांगश्चन्द-
नांगदी ॥ वीरहा विषम: शून्यो

घृताशीरचलश्चलः ॥ ७९ ॥ अ-
मानी मानदो मान्यो लोकस्वा-
मी त्रिलोकधृक् ॥ सुमेधा मेध-
जो धन्यः सत्यमेधा धराधरः
॥८०॥ तेजोवृषो द्युतिधरः सर्व-
शस्त्रभृतांवरः ॥ प्रग्रहो निग्रहो

व्यग्रो नैकशृङ्गो गदाग्रजः ॥८१॥
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्ग-
तिः॥ चतुरात्मा चतुर्भावश्चतुर्वे-
दविदेकपात् ॥ ८२ ॥ समावर्तो
निवृत्तात्मा दुर्जयो दुरतिक्रमः॥
दुर्लभो दुर्गमो दुर्गो दुरावासो

दुरारिहा ॥८३॥ शुभांगो लोक-
सारंगः सुतन्तुस्तन्तुवर्धनः ॥
इन्द्रकर्मा महाकर्मा कृतकर्मा
कृतागमः ॥८४॥ उद्भवः सुन्दरः
सुन्दो रत्ननाभः सुलोचनः ॥
अर्को वाजसनः शृङ्गीजयन्तस्स-

वैविज्जयी ॥ ८५ ॥ सुवर्णबिन्दु-
रक्षोभ्यः सर्ववागीश्वरेश्वरः ॥
महारुद्रो महागर्तो महाभूतो महा-
निधि ॥८६॥ कुमुदः कुन्दरः
कुन्दः पर्जन्यः पावनोऽनिलः ॥
अमृतांशोऽमृतवपुः सर्वज्ञः सर्व-

वि० तोमुखः ॥८७॥ सुलभः सुव्रतः
३४ सिद्धः शत्रुजिच्छत्रुतापनः ॥
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरा-
न्ध्रनिषूदनः ॥८८॥ सहस्रार्चिः
सप्तजिह्वः सप्तैधाः सप्तवाहनः ॥ स० ३४
अमूर्तिरनघोऽचिन्त्यो भय-

कृद्भयनाशनः ॥ ८९ ॥ अगु-
र्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो
महान् ॥ अधृतःस्वधृतः स्वास्यः
प्राग्वंशो वंशवर्धनः ॥९०॥ भार-
भृत्कथितो योगी योगीशः सर्व-
कामदः ॥ आश्रमः श्रमणः क्षा-

वि० मः सुवर्णो वायुवाहनः ॥६१॥
धनुर्धरो धनुर्वेदो दण्डो दमयि-
३५ ता दमः ॥ अपराजितः सर्वसहो
नियन्ता नियमो यमः ॥६२॥
सत्त्ववान्सात्त्विकः सत्यः सत्य-
धर्मपरायणः ॥ अभिप्रायः प्रि-

स० ३५

याहौँऽर्हः प्रियकृत्प्रीतिवर्धनः ॥ ९३ ॥ विहायसगतिज्योंतिः सुरुचिर्हुतभुग्विभुः ॥ रविर्विरो-
चनः सूर्यः सविता रविलोचनः ॥ ९४ ॥ अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ॥ अ-

निर्विण्णाः सदामर्षी लोकाधि-
ष्ठानमद्भुतः ॥९५॥ सनात्सना-
तनतमः कपिलः कपिरव्ययः ॥
स्वस्तिदः स्वस्तिकृत् स्वस्ति
स्वस्तिभुक् स्वस्तिदक्षिणः
॥९६॥ अरौद्रः कुण्डली चक्री

विक्रम्यूर्जितशासनः ॥ शब्दा-
तिगः शब्दसहः शिशिरः शर्व-
रीकरः ॥ ९७ ॥ अक्रूरः पेशलो
दक्षो दक्षिणः क्षमिणां वरः ॥
विद्वत्तमो वीतभयः पुण्यश्रवण-
कीर्तनः ॥९८॥ उत्तारणो दुष्कृ-

तिहा पुण्यो दुःस्वप्ननाशनः ॥
वीरहा रक्षणः सन्तो जीवनः
पर्यवस्थितः ॥ ९९ ॥ अनन्तरू-
पोऽनन्तश्रीर्जितमन्युर्भयापहः ॥
चतुरस्रो गभीरात्मा विदिशो
व्यादिशो दिशः ॥ १०० ॥

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रु-
चिरांगदः ॥ जननो जनजन्मादि-
र्भीमो भीमपराक्रमः ॥ १ ॥ आ-
धारनिलयो धाता पुष्पहासः प्र-
जागरः ॥ ऊर्ध्वगः सत्पथाचारः
प्राणदः प्रणवः पणः ॥२॥प्रमाणं

वि० प्राणनिलयः प्राणभृत्प्राणजीव-
नः॥ तत्त्वं तत्त्वविदेकात्मा जन्म-
३८ मृत्युजरातिगः॥ ३ ॥ भूर्भुवः स्व-
स्तरुस्तारः स पिताप्रपितामहः॥
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो य-
ज्ञवाहनः॥४॥ यज्ञभृद्यज्ञकृद्यज्ञी

यज्ञभुग्यज्ञसाधनः ॥ यज्ञान्तकृ-
द्यज्ञगुह्यमन्नमन्नाद एव च ॥५॥
आत्मयोनिः स्वयंजातो वैखानः
सामगायनः ॥ देवकीनन्दनः
स्रष्टा क्षितीशः पापनाशनः ॥६॥
शंखभृन्नन्दकी चक्री शार्ङ्गधन्वा

वि०

गदाधरः ॥ रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७॥ सर्व-

३६

प्रहरणायुधः ॥ ॐ नम इति ॥ इतीदं कीर्तनीयस्य केशवस्य महात्मनः ॥ नाम्नां सहस्रं दि-व्यानामशेषेण प्रकीर्तितम् ॥८॥

य इदं शृणुयान्नित्यं यश्चापि परि-
कीर्तयेत् । नाशुभं प्राप्नुयात्कि-
ञ्चित् सोऽमुत्रेह च मानवः ॥ ९ ॥
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो
विजयी भवेत् ॥ वैश्यो धनसमृ-
द्धः स्याच्छूद्रः सुखमवाप्नुयात्

॥११०॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥ कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाः ॥ ११ ॥ भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः । सहस्रं वासुदेवस्य नाम्नामेतत्प्र-

कीर्तयेत् ॥ १२ ॥ यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ॥ अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ १३ ॥ न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ॥ भवत्यरोगो द्युतिमान्बल-

रूपगुणान्वितः ॥ १४ ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १५ ॥ दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ॥ स्तुवन्नामसहस्रेण

नित्यं भक्तिसमन्वितः ॥ १६ ॥
वासुदेवाश्रयो मर्त्यो वासुदेव-
परायणः ॥ सर्वपापविशुद्धात्मा
याति ब्रह्म सनातनम् ॥ १७ ॥
न वासुदेवभक्तानामशुभं विद्यते
क्वचित् ॥ जन्ममृत्युजराव्याधि-

भयं नैवोपजायते ॥ १८ ॥ इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥ युज्येतात्मसुखक्षान्ति-श्रीधृतिस्मृतिकीर्तिभिः ॥ १९ ॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ॥ भवन्ति कृतपु-

ण्यानां भक्तानां पुरुषोत्तमे।१२०।
द्यौस्सचन्द्रार्कनक्षत्रा खं दिशो
भूर्महोदधिः॥ वासुदेवस्य वीर्ये-
ण विधृतानि महात्मनः॥ २१॥
ससुरासुरगन्धर्वं सयक्षोरगराक्ष-
सम्॥ जगद्वशेवर्ततेऽदः कृष्णस्य

सचराचरम् ॥२२॥ इन्द्रियाणि
मनोबुद्धिः सत्त्वं तेजो बलं धृतिः॥
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ
एव च ॥२३॥ सर्वागमानामा-
चारः प्रथमं परिकल्पते ॥ आचा-
रप्रभवो धर्मो धर्मस्य प्रभुरच्यु-

तः ॥ २४ ॥ ऋषयः पितरो देवा
महाभूतानि धातवः ॥ जङ्गमा-
जंगमं चेदं जगन्नारायणोद्भवम्
॥२५॥ योगो ज्ञानं तथा सांख्यं
विद्याः शिल्पादिकर्म च ॥ वेदाः
शास्त्राणि विज्ञानमेतत्सर्वंजना-

र्दनात् ॥२६॥ एको विष्णुर्मह-
द्भूतं पृथग्भूतान्यनेकशः ॥ त्रीन्
लोकान् व्याप्य भूतात्मा भुङ्क्ते
विश्वभुगव्ययः ॥२७॥ इमं स्तवं
भगवतो विष्णोर्व्यासेन कीर्ति-
तम् ॥ पठेद्य इच्छेत्पुरुषः श्रेयः

प्राप्तुं सुखानि च ॥२८॥ विश्वेश्व-
रमजं देवं जगतः प्रभवोप्ययम् ॥
भजन्ति ये पुष्कराक्षं न ते यान्ति
पराभवम् ॥ २९ ॥ अर्जुन उवा-
च ॥ पद्मपत्रविशालाक्ष पद्मना-
भ सुरोत्तम ॥ भक्तनामनुरक्ता-

नां त्राता भव जनार्दन ॥१३०॥
श्रीभगवानुवाच ॥ यो मां नाम-
सहस्रेण स्तोतुमिच्छति पाण्ड-
व ॥ सोऽहमेकेन श्लोकेन स्तुत
एव न संशयः ॥३१॥ नमोऽस्त्व-
नन्ताय सहस्रमूर्तये सहस्रपादा-

क्षिशिरोरुबाहवे ॥ सहस्रनाम्ने
पुरुषाय शाश्वते सहस्रकोटीयुग-
धारिणे नमः ॥ ३२ ॥ नमः
कमलनाभाय नमस्ते जलशा-
यिने ॥ नमस्ते केशवानन्त
वासुदेव नमोऽस्तु ते ॥३३॥ वास-

नाद्वासुदेवस्य वासितं भुवनत्र-
यम् ॥ सर्वभूतनिवासोऽसि वासु-
देव नमोऽस्तु ते ॥३४॥ नमो ब्रह्म-
ण्यदेवाय गोब्राह्मणहिताय च ॥
जगद्धिताय कृष्णाय गोविन्दाय
नमो नमः ॥ ३५ ॥ आकाशा-

त्पतितं तोयं यथा गच्छति साग-
रम् ॥ सर्वदेवनमस्कारः केशवं
प्रति गच्छति ॥३६॥ एष निष्क-
ण्टकः पन्था यत्र संपूज्यते हरिः॥
कुपथं तं विजानीयाद्गोविन्दराहि-
तागमम् ॥३७॥ सर्ववेदेषु यत्पु-

रायं सर्वतीर्थेषु यत्फलम् ॥ तत्फ-
लं समवाप्नोति स्तुत्वा देवं जना-
र्दनम् ॥३८॥ यो नरः पठते नित्यं
त्रिकालं केशवालये ॥ द्विकाल-
मेककालं वा क्रूरं सर्वं व्यपोहति
॥ ३९ ॥ दह्यन्ते रिपवस्तस्य

सौम्याः सर्वे सदा ग्रहाः ॥
विलीयन्ते च पापानि स्तवे
ह्यस्मिन्प्रकीर्तिते ॥ १४० ॥ ये-
न ध्यातः श्रुतो येन येनायं प-
ठितः स्तवः ॥ दत्तानि सर्व-
दानानि सुराः सर्वे समर्चिताः

वि० ॥ ४१ ॥ इह लोके परे वाऽपि
४८ न भयं विद्यते क्वचित् ॥ नाम्नां
सहस्रं योऽधीते द्वादश्यां मम
सन्निधौ ॥४२॥ स निर्दहति पा-
पानि कल्पकोटिशतानि च ॥ अ-
श्वत्थसन्निधौ पार्थ कृत्वा मनसि

स० ४८

केशवम् ॥४३॥ पठेन्नामसहस्रं
तु गवां कोटिफलं लभेत् । शि-
वालये पठेन्नित्यं तुलसीवनसं-
स्थितः ॥४४॥ नरो मुक्तिमवा-
प्नोति चक्रपाणेर्वचो यथा ॥
ब्रह्महत्यादिकं पापं सर्वं सद्यो

विनश्यति ॥ १४५ ॥

इति श्रीमन्महाभारते शतसाहस्र्यां सं० वैयासिक्यामानुशासनिके
पर्वणि दानधर्मे भीष्मयुधिष्ठिरसंवादे श्रीविष्णो-
र्दिव्यसहस्रनामस्तोत्रं संपूर्णम् ॥

❀ अथ ❀

# अष्टादशश्लोकी गीता प्रारभ्यते ।

❀ श्रीगणेशाय नमः ❀ अर्जुन उवाच ❀

निमित्तानि च पश्यामि विपरीतानि केशव ॥
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥१॥

❁ श्रीभगवानुवाच ❁

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ॥ सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ २ ॥ कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्॥ इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ३ ॥ श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ॥ ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ४ ॥ यतेन्द्रियमनो-

बुद्धिर्मुनर्मोक्षपरायणः ॥ विगतेच्छाभयक्रोधो
यः सदा मुक्त एव सः ॥ ५ ॥ युक्ताहार-
विहारस्य युक्तचेष्टस्य कर्मसु ॥ युक्तस्वप्नाव-
बोधस्य योगो भवति दुःखहा ॥६॥ दैवी ह्येषा
गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यन्ते
मायामेतां तरन्ति ते ॥७॥ अग्निर्ज्योतिरहः शुक्लः
षण्मासा उत्तरायणम् ॥ तत्र प्रयाता गच्छन्ति
ब्रह्म ब्रह्मविदो जनाः ॥ ८ ॥ अपि चेत्सुदुरा-

चारो भजते मामनन्यभाक् ॥ साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ९ ॥ यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥ असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ १० ॥ मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ॥ निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ११ ॥ श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥ ध्यानात् कर्मफलत्यागस्त्या-

गाच्छान्तिरनन्तरम् ॥ १२ ॥ क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ १३ ॥ मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥ स गुणान्समतीत्यैव ब्रह्मभूयाय कल्पते ॥ १ ॥ निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ॥ द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ १५ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्
॥ १६ ॥ मनःप्रसादः सौम्यत्वं मौनमात्म-
विनिग्रहः ॥ भावसंशुद्धिरित्येवं तपो मानस-
मुच्यते ॥ १७ ॥ सर्वधर्मान्परित्यज्य मामेकं
शरणं व्रज ॥ अहं त्वा सर्वपापेभ्यो मोक्षयि-
ष्यामि मा शुचः॥ १८ ॥ गीतासारमिदं पुण्यं
यः पठेत्सुसमाहितः ॥ विष्णुलोकमवाप्नोति

भयशोकविनाशनम् ॥ १६ ॥ इति श्रीवेदव्यास-
विरचिता अष्टादशश्लोकी गीता संपूर्णा ॥

श्रीगणेशाय नमः ॥ ओमित्येकाक्षरं ब्रह्म
व्याहरन्मामनुस्मरन् ॥ यः प्रयाति त्यजन्देहं
स याति परमां गतिम् ॥ १ ॥ स्थाने हृषीकेश
तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥ रक्षां-
सि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च
सिद्धसंघाः ॥ २ ॥ सर्वतः पाणिपादं तत्स-

र्वतोऽक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥ सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥४॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥ छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥५॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वैरहमेव वेद्यो वेदान्त-

कृद्वेदविदेव चाहम् ॥६॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ७ ॥ इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकी गीता संपूर्णा । श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥

ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥ सर-

हस्यं तदंगं च गृहाण गदितं मया ॥ १ ॥
यावानहं यथाभावो यद्रूपगुणकर्मकः ॥ तथैव
तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥
अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥ पश्चा-
दहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥
ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ॥
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः
॥ ४ ॥ यथा महांति भूतानि भूतेषूच्चाव-

चेष्वनु ॥ प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ५ ॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः अन्वयव्यतिरेकाभ्यां यः स्यात्सर्वत्र सर्वदा ॥ ६ ॥ एतन्मतं समातिष्ठ परमेण समाधिना ॥ भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ७ ॥

इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कन्धे भगवद्ब्रह्मसंवादे चतुःश्लोकीभागवतं समाप्तम् ।

अथ

# कमलनेत्रस्तोत्रप्रारम्भः ।

ॐ श्री गणेशाय नमः ॥ ॥ ॐ श्रीकमलनेतर कटि पीतांबर अधर मुरली गिरिधरम् ॥ मुकुट कुण्डल लकुटिया सांवरे राधेवरम् ॥ १ ॥ कूल जमुना धेनु आगे सकल गोपीजन मन हरम् ॥ पीत बस्तर गरुड़ बाहन चरण सुख नित सागरम् ॥ २ ॥ करत केलि कलोल निशिदिन कुञ्ज भवन उजागरम् ॥ अचल अमल अडोल निश्चल पुरु-

षोत्तम अपरापरम् ॥ ३ ॥ दीनानाथ दयाल गिरिधर कंसहिरणाकुसहरम् ॥ गलफूलमाल विसाल लोचन अधिक सुंदर केशवम् ॥ बंशीधर बसुदेव छइया बलि छल्यो है श्रीवामनम् ॥ ४ ॥ जल डूबते गज राखि लीनो लंका छेद्यो रावनम् ॥ सप्त द्वीप नव खण्ड चौदा भवन कीनो रामजी यकपलम् ॥ ५ ॥ द्रौपदी जी की लाज राखी कहाँ लौ उपमाकरम् ॥ दीनानाथ दयाल पूरण करुणामय करुणाकरम् ॥६॥ कवि दत्तदास विलास निशिदिन नाम जप नित नागरम् ॥ प्रथम गुरु जी के

चरण बन्दों यस्य ज्ञान प्रकाशितम् ॥ ७ ॥
आदिविष्णुजगादि ब्रह्मा सेवितं शिव शंकरम् ॥
श्रीकृष्ण केशव कृष्ण केशव कृष्ण यदुपति
केशवम् ॥ ८ ॥ श्रीराम रघुवर राम रघुवर राम
रघुवर राघवम् ॥ श्रीराम कृष्ण गोविंद माधव
वासुदेव श्रीवामनम् ॥ ९ ॥ मच्छ कच्छ वराह
नरसिंह पाहि रघुपति पावनम् ॥ मथुरा में
केशवराय विराजे गोकुल बाल मुकुंदजी ॥ ॥
श्रीवृंदावन में मदन मोहन गोपीनाथ गोविंदजी ॥
॥ १० ॥ यत्र मथुरा यत्र गोकुल जहाँ श्रीपति

अवतरे ॥ धन्य जमुनानीर निर्मल ग्वाल बाल सखा वरे ॥ ११ ॥ नवनीत याचना करत निरतत शिव विरिंच मनमोहितम् ॥ कालिंदीतट करत क्रीडा बाल अद्भुत सुन्दरम् ॥ १२ ॥ ग्वाल बाल सब सखा विराजे संग राधे वामने ॥ बन्सीबटतट निकट जमुना मुरली टेर सुनावहीं ॥ १३ ॥ भज राधे रघुवंश उत्तम परम राजकुमारजी ॥ सीताके पति भक्तनकी गति जगत्प्राण उधार जी ॥ ॥ १४ ॥ जनक राजा पनक राखो धनुष बाण चढ़ावहीं ॥ सती सीता नाम जाके श्रीरामचन्द्र

प्रणामहीं ॥ १५ ॥ जन्म मथुरा खेल गोकुल नंदके हृदि नन्दनम् ॥ बाललीला पतित पावन देवकी वसुदेवकम् ॥ १६ ॥ श्रीकृष्ण कलिमल हरण जाके जो भजे हरिचरण को ॥ भगत अपने देह माधव भवसागर के तरण को ॥ १७ ॥ जगन्नाथ जगदीश स्वामी श्री बद्रीनाथ विश्वंभरम् ॥ द्वारिका के नाथ श्रीपति केशवं प्रणमाम्यहम् ॥ १८ ॥ श्री कृष्ण अष्टपद पढ़त निशि दिन विष्णुलोकं स गच्छते ॥ श्री गुरु रामानन्द अवतार स्वामी कवि दत्तदास समापते ॥ १६ ॥ इति श्रीकमलनेत्रस्तोत्रं समाप्तम् ॥

# सूचीपत्र।

गंगालहरी—मूल पण्डितराज जगन्नाथ कृत— मूल्य
( गंगाजी की स्तुति ) मूल =)

शिवमहिम्नस्तोत्र—वेदसार शिवस्तोत्र सहित
मूल बड़ा अक्षर =)

मूलरामायण—मूल " " =)

दानखण्डोक्तपुण्याहवाचन—मूल बड़ा अक्षर =)

गोपालसहस्रनाम—मूल रेशमी बड़ा अक्षर २४ अवतारों के चित्रों सहित ।≡)

त्रिकालसन्ध्या—देवर्षिपितृतर्पण सहित भा० टी० अत्युत्तम कागज मूल्य =)

बृहन्नित्यकर्मप्रयोगमाला—पण्डित शिवदत्तजी कविरत्न संग्रहीत-जिसमें नित्यनियम के सैकड़ों विषय भली भाँति वर्णित गये हैं। यह पुस्तक कर्मकाण्डियों को अवश्य ही संग्रह करनी चाहिये। मूल्य १।)

दशकुमारचरितम्—( अपहारवर्म्मचरितान्तम् ) महाकविश्रीदण्डितप्रणीतपण्डितशिवदत्तजीकविरत्न विरचितया अन्वितार्थप्रकाशिकया सुहृत्प्रमोदिन्या व्याख्यया सहितम् ।

सजिल्द १॥)

हमारे यहाँ श्रीवेङ्कटेश्वर स्टीम प्रेस बम्बई, निर्णयसागर, काशी, लखनऊ, लाहौर तथा और सब स्थानों

वि० की पुस्तकों के अतिरिक्त जर्म्मनी, बिलायत आदि की स्त०
संस्कृत पुस्तकें भी मिलती हैं।

५१

प्राप्त होने का एकमात्र स्थान —

बम्बई-पुस्तक-एजेन्सी,

१९५-१, हरिसन रोड, कलकत्ता।

५१

